# चम्पूरामायणम् ।

विदर्भाधिपतिना

श्रीभोजनृपतिना

विरचितम् ।

बि, ए, उपाधिधारिणा

श्रीजीवानन्द विद्यासागर भट्टाचार्य्येण

संस्कृत्य प्रकाशितम् ।

कलिकाता नगरे

सरस्वती यन्त्रे

मुद्रितम् ।

इं १८७८ ।

# अथ चम्पूरामायणम् ।

---

लक्ष्मीं तनोतु सुतरामितरानपेक्ष-
मङ्घ्रिद्वयं निगमशाखिशिखाप्रवालम् ।
हैरम्बमम्बुरुहडम्बरचौर्यनिघ्नं
विघ्नाद्रिभेदशतधारधुरन्धरं नः ॥ १ ॥

उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत्
तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चे-
त्तानन्तरेण निपतेत् क्व नु मत्प्रणामः ॥ २ ॥

वाल्मीकिगीतरघुपुङ्गवकीर्तिलेशै-
स्तृप्तिं करोमि कथमप्यधुना बुधानाम् ।
गङ्गाजलैर्भुवि भगीरथयत्नलब्धैः
किं तर्पणं न विदधाति जनः पितॄणाम् ॥ ३ ॥

गद्यानुबन्धरसमिश्रितपद्यसूक्ति-
र्हृद्या हि वाद्यकलया कलितेव गीतिः ।
तस्माद्दधातु कविमार्गविदां सुखाय
चम्पूप्रबन्धरचनां रसना मदीया ॥ ४ ॥

वाचं निशम्य भगवानथ नारदस्य
प्राचेतसः प्रवचसां प्रथमः कवीनाम् ।
माध्यन्दिनाय नियमाय महर्षिसेव्यां
पुण्यामवाप तमसामसमां निम्नगाम् ॥ ५ ॥

तत्र कश्चन क्रौञ्चमिथुनादेकं पञ्चशरपरवशमपि

व्याधमानुषिक्तं निध्यायतः बहानुकम्पस्य भगवतो वाल्मीके-र्वदनारविन्दाच्छन्दोमयी काचिदेवं निःससार सरस्वती।

मा निषाद! प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत् क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥ ६॥

तदनु समयोचितकृत्यं निर्वर्त्य स्वाश्रममुपगतवति सति भगवति वाल्मीकौ।

वाणी विलासमपरत्र कृतोपलम्भ-
मम्भोजभूरसहमान इवाविरासीत्।
आभाति यत् कृतिरनेकविधप्रपञ्च-
व्याजेन्द्रजालविधिसाधकपिञ्छिकेव॥ ७॥

ततः परमहर्षिणा महर्षिणा विधिवदभ्यर्चितः परमेष्ठी-मध्यमलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपदिष्ट-मानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात्।

अथ सरसिजयोनेराज्ञया रामवृत्तं
करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या।
शुभमतनुत काव्यं स्वादु रामायणाख्यं
मधुमय भणितीनां मार्गदर्शी महर्षिः॥ ८॥

एनं प्रबन्धं प्रयोक्तुं लोके कः समर्थ इति चिन्तामुप-गतवति सति भगवति वाल्मीकौ।

उपागतौ मिलितपरस्परोपमौ
बहुश्रुतौ श्रुतिमधुरस्वरान्वितौ।
विचक्षणौ विविधनरेन्द्रलक्षणौ
कुशीलवौ कुशलवनामधारिणौ॥ ९॥

एतौ मुनिः परिगृह्य स्वकृतिं अपाठयत् । तौ पुनः कृतस्नातौ गायमानौ दृष्ट्वा रामः प्रहृष्टमनाः स्वभवनमानीय भ्रातृभिः सह निजचरितं गातुमन्वयुङ्क्त । ततश्च ।

छन्दोमयीनां निलयस्य वाचां मन्त्रिवसन्तौ मुनिसत्तमस्य ।
एतौ कुमारौ रघुवीरवृत्तं यथाक्रमङ्गातुमुपक्रमेताम् ॥ १० ॥

अस्ति प्रशस्ता जनलोचनानामानन्दसन्दायिषु कोसलेषु ।
आज्ञासमुत्सारितदानवानां राज्ञामयोध्येति पुरी रघूणाम् ॥ ११ ॥

तामावसद्दशरथः सुरवन्दितेन
संक्रन्दनेन विहितासनसंविभागः ।
वृन्दारकारिविजये सुरलोकलब्ध-
मन्दारमाल्यमधुवासितबाहुभूमिः ॥ १२ ॥

अथासावनपत्यतया दूयमानमानसे पुत्रार्थं क्रतुमश्वमेधं विधातुं मन्त्रिभिः सह मन्त्रयमाणे दशरथे सुमन्त्रः प्रहृष्टमना मद्धर्मरक्षदेशसङ्कतावग्रहनिग्रहशोण्डस्य विभाण्डकसूनोरवश्यमृष्यशृङ्गस्य प्रभावात् प्रभवो भविता कुमाराणामिति सनत्कुमारोक्तं पुरावृत्तमस्मै दशरथाय कथयामास । सोऽपि सुमन्त्रवचनाच्छान्ताधिः शान्ता कुटुम्बिनं सम्बन्धिनं मुनिमानीय वसिष्ठादिष्टमश्वमेधाध्वरं सरयूरोधसि विधाय तत्र पुत्रीयामिष्टिं विधिवत्कर्तुमारभत । तदनु हविराहरणाय धरण्यां कृतावतरणाः सर्वे गीर्वाणाः शक्रप्रमुखाश्चतुर्मुखाय दशमुखप्रतापानलशोषोपसंशोषणमावेद्य तेन सह शरणमिति शार्ङ्गधन्वानं मन्वानाः कृतनानाविधप्रस्तुतस्तुतयः क्षीराम्बुराशिमावेदुः ।

सन्तापघ्नं सकलजगतां शार्ङ्गपाणाभिरामं

लक्ष्मीविद्युल्लसितमतसीगुच्छसच्छायकायम् ।
वैकुण्ठाख्यं मुनिजनमनश्चातकानां शरण्यं
कारुण्यापं त्रिदशपरिषत्कालमेघं ददृशुः ॥ १३ ॥

क्षीराम्भोधेर्जठरमभितो देहभासां प्ररोहैः
कालोन्मीलत्कुवलयदलाद्वैतमापादयन्तम् ।
आतन्वानं भुजगशयने कामपि क्षौमगौरे
निद्रामुद्रां निखिलजगतीरक्षणे जागरूकाम् ॥ १४ ॥

प्रह्लादस्य व्यसनमभितं दैत्यवर्गस्य दर्पं
स्तम्भं वक्षस्थलमपि रिपोर्यौगपद्येन भेत्तुम् ।
बद्धश्रद्धं पुरुषवपुषा मिश्रिते विश्वदृष्टे
दंष्ट्रारोचिर्विशदभुवने रंहसा सिंहवेषे ॥ १५ ॥

नारायणाय नलिनायतलोचनाय
नामावशेषितमहाबलिवैभवाय ।
नानाचराचरविधायकजन्मदेश-
नाभीपुटाय पुरुषाय नमः परस्मै ॥ १६ ॥

इति प्रणम्योत्थितानेतान् स्तुतिरसमुखरितहरिन्मुखान् हरिहयप्रमुखानखिलानमरगणानरुणतामरसविलासचोरैर्लोचनमरीचिवीचिसञ्चारैरानन्दयन्नरविन्दलोचनः स्फुटमभाषत ।

अपि कुशलममर्त्याः ! स्वागतं साम्प्रतं वः
श्रमितदनुजदम्भा किं नु दम्भोलिकेलिः ।
अपि धिषणमनीषा निर्मिता नीतिमार्गा-
स्त्रिदशनगरयोगक्षेमकल्पे क्षमन्ते ॥ १७ ॥

एवं भगवतः कुशलानुयोगपुरःसरीमसृणतासारसरसां

सरस्वतीमाकर्ण्य सम्पूर्णमनोरथा सुमनसां संसत् पुंसे परस्मै विज्ञापयामास । देव ! कथमकुशलमाविर्भवेद्भवता कृतावलम्बानामस्माकम् । किन्तु ।

अस्ति प्रशस्तविभवैर्विबुधैरलङ्घ्या
लङ्केति नाम रजनीचरराजधानी ।
माणिक्यमन्दिरभुवां महसां प्ररोहै-
स्तेजस्त्रयाय दिनदीपदशां दिशन्ती ॥ १८ ॥

एनां पुराणनगरीं नगरीति सालां
सालाभिरामभुजनिर्जितयक्षराजः ।
हेलाभिभूतजगतां रजनीचराणां
राजा चिराद्भवति रावणनामधेयः ॥ १९ ॥

यद्बाहुराहुरसनायितशस्त्रधारा-
दिक्पालकीर्तिमयचन्द्रमसं ग्रसन्ते ।
तद्वैरिणां रणमुखे शरणप्रदायी
नैवास्ति कश्चिदमुमन्तकमन्तरेण ॥ २० ॥

अम्भोजसम्भवममुं बहुभिस्तपोभि-
राराधयन् वरमवाप परैर्दुरापम् ।
तस्मात्समस्तभुवनं निजशासनस्थ
वशीकरोति रजनीचरचक्रवर्ती ॥ २१ ॥

तेन वयं पराधीना इव भवामः । तथाहि । सोऽयं कदाचन क्रीडाधराधरमधिरुह्य सावरोधवधूजनचरणाभ्यां ततइतः सञ्चरेदागमिष्यत्यागत इत्यनाविष्कृता तपोभयेन भगवान् सहस्रभानुरपि सङ्कुचितभानुरेव तत्सानूनि नूनं समाश्रयते । एष मृगाङ्कोऽपि मृगयायासपरिश्रान्तिवि-

आस्ये ससंभ्रमं न मज्जनपरिवृते मज्जनस्पृहाभिमुखे नि-र्जितशतमुखे दशमुखे तपत्नविचित्रतरशातकुम्भस्तम्भाग्र-प्रत्यग्रप्रत्युप्तस्फटिकशिलाशालभञ्जिकापुञ्जकरतलकलितनि-लोपलमयकलशमुखादच्छाच्छामविच्छिन्नपाताम्बुधारां निज-कराभिमर्शादापादयन् तस्य प्रसादपिशुनानां शुनासीर-चिरकाङ्क्षितानां विंशतिलोचनानां क्षणमात्रं पात्रं भवति । तेन पुलस्त्यनन्दनेन संक्रन्दननन्दनवनात् स्वमन्दिरोद्यान-मानीतस्य मन्दारप्रमुखस्य वृन्दारकतरुवृन्दस्य वन्दीकृत-सुरसुन्दरीनयनेन्दीवरवृन्दात् तत्करारविन्दकनककलशाच्च मन्दोष्णं स्यन्दमानैरम्बुभिर्जम्बालितालवालस्य पचेलि-मानामपि कुसुमानां पतनभयमाशङ्कमानाः पवमानाः सततं परिस्पन्दितुमपि प्रभवो न भवन्ति । एतेऽपि पावका रूढिशङ्कां हुतवहाख्यां वहन्तस्तद्गृहे गार्हपत्यपुरः-सराः पौरोगवीं धुरं दधति । किं बहुना । स एष मान-वादवमान आगमिष्यतीत्यमन्दानस्तदितरैरवध्यत्वं चतुरा-ननवराल्लब्ध्वा समुद्धतः सम्प्रति सम्प्रहारसमाक्रान्तदिगन्त-दन्तावलदन्तकुन्तव्रणकिणाङ्कपुटितवक्षःस्थलस्थलकमलिनीं वनवारण इव रावणस्त्रिलोकीमभिभवन् भवदीयानित्य-स्मान् न जातु किञ्चिदपि जानातीति । अथ भगवानाकर्ण्य गीर्वाणगणवाणीम् ।

इन्द्रनीलाचलोदग्रचन्द्रिकाधवलस्मितः ।
वाचमूचे सुधाधारामधुरां मधुसूदनः ॥ २२ ॥

भवतामपराधविधायिनस्तस्य यातुधानस्य निधनमधु-नैव विधातुं शक्यम् । किन्तु सरसिजासनशासनमप्यमोघी-

कुर्वन्नुर्व्वीतले पुत्त्रीयतः सुत्रामामित्त्रस्य दशरथस्य मनोरथमपि पूरयितुमाहृतमानुषवेषः सन् अहमेव तं भविष्यामीत्युक्त्वान्तरधात् । ततः सा परिषदनिमिषाणामुन्मिषितहर्षाणां हृषीकेशादेशात् प्रशमितदुर्दशानि निर्दशाननानि चतुर्दशभुवनानि बुद्धा दुग्धसागराचिरगात् । ततस्तानमरान् प्राह स पितामहः । भवन्तस्तावदवतरिष्यतो लक्ष्मीसहायस्य साहाय्यार्थमप्सरःप्रभृतिषु युवतिषु वानरभल्लगोपुच्छवेषभृतः प्रथितप्रभावाः प्रजाः प्रजनयेयुरिति । पुरा खलु मम जृम्भारम्भे सम्भूतो जाम्बवानिति । ततस्ते गीर्वाणास्तथा कुर्वन् । अथ वैतानाद्वैश्वानरान् नरः प्राजापत्यः सहेमपात्रः कश्चिदुत्थाय दशरथाय पुत्त्रीयते पायसममृतप्रायं प्रायच्छत् । ततः ।

कौसल्यायै प्रथममदिशद् भूपतिः पायसार्द्धं
प्रादादर्द्धं प्रणयमधुरं केकयेन्द्रस्य पुत्त्र्यै ।
एते देव्यौ तरलमनसः पत्युरालोच्य भावं
स्वार्द्धांशाभ्यां स्वयमकुरुतां पूर्णकामां सुमित्राम् ॥२३॥

अवभृथेऽवसिते सरयूतटादथ यथायथमुच्चलिते जने ।
दशरथः परिपूर्णमनोरथः पुरमगात् पुरुहूतपुरोपमाम् ॥२४॥
अपाटवात् केवलमङ्गकानां मनोज्ञकान्तेर्महिषीजनस्य ।
शनैः शनैः प्रोषितभूषणानि चकाशिरे दौहृदलक्षणानि ॥२५॥
मन्दमन्दमपयाद्वलित्रयी गाधताविषयनाभिगह्वरा ।
कोसलेन्द्रदुहितुः शनैरभूच्चाध्यशश्चिरपि दृष्टिगोचरा ॥ २६ ॥

न्यग्रोधपत्त्रसमतां क्रमशः प्रयाता-
मङ्गीचकार पुनरप्युदरं कृशाङ्ग्याः ।

जीवातवेद्यमसृखीरगपीड़ितानां
गर्भच्छलेन वसता परमेण पुंसा ॥ २७ ॥

अपि च ।

मध्यं तनुत्वादविभाव्यमानमाकाशमासीदसितायताक्ष्याः ।
गर्भोदये विष्णुपदापदेशात् कार्श्यं विहायापि विहाय एव॥२८॥

उच्चस्थे ग्रहपञ्चके सुरगुरौ सेन्दौ नवम्यां तिथौ
लग्ने कर्कटके पुनर्वसुयुते मेषं गते पूषणि ।
निर्दग्धुं निखिलाः पलाशसमिधो मेध्यादयोध्यारणे-
राविर्भूतमभूतपूर्वमभवद्यत् किञ्चिदेकं महः ॥२९॥

अपिच । अथ रामाभिधानेन कवेः सुरभयन् गिरः ।
अलं चकार कारुण्याद्रघूणामन्वयं हरिः ॥ ३० ॥
तमेवमन्वजायन्त त्रयस्त्रेताग्नितेजसः ।
अग्रजन्तेऽनुकुर्वन्तस्तैस्तैर्लोकोत्तरैर्गुणैः ॥ ३१ ॥
भरतस्तेषु कैकेय्यास्तनयो विनयोज्ज्वलः ।
अन्यौ लक्ष्मणशत्रुघ्नौ सुमित्रायां सतीदयौ ॥ ३२ ॥
इति वव्रधिरे वीराः प्रजाक्षेमाय दीक्षिताः ।
लोकानन्दा मुकुन्दस्य चत्वार इव बाहवः ॥ ३३ ॥

अथ कदाचिदपरिमेयमायाभयानकयुद्धसमुद्धतदैत्यबलावस्कन्दकान्दिशीकवृन्दारकानीकप्रतिपाद्यमानमहारथः पङ्क्तिरथसपर्य्याजातामामाश्चर्य्याणामायतनं त्रिशङ्कुयाजिनं भगवन्तं पद्यप्रबन्धमिव दर्शितसर्गभेदं प्राकृतव्याकरणमिव प्रकटितवर्णव्यत्यासं बुधमिव सोमसुतं कुशिकसुतमद्राक्षीत् । तदनु यथाविधि परिगृहीतसपर्य्येण मर्य्यादातीतमहिम्ना गाधेतरहृदयेन गाधिनन्दनेन सत्र-

परित्राणार्थमित्थमभ्यर्थितः पार्थिवोऽभूत्। राजन्! तव कुमारेण विनयाभिरामेण रामेण प्रवासनमित्रेण सौमित्रिमात्रपरिजनेन क्रियमाणक्रतुरक्षो रक्षोदुरितमुक्तोद्धृतावभृथो भवितुमभिलषामीति। एवंविधमाकर्ण्य कर्णपरुषं महर्षिभाषितं अतिमात्रपुत्रवात्सल्यात् कौशल्याजानिः सशल्यान्तःकरणोऽभूत्। ततस्तस्मिन् बहुप्रकारैरपरिहार्य्यनिश्चये भगवति विश्वामित्रे दशरथस्थपनकुलहितेन पुरोहितेनैवमभिहितोऽभूत्।

पर्याप्तकामाय भवानमुष्मै कुर्यात् सपर्यां कुशिकात्मजाय।
निर्यातुधानां वसुधां विधातुं निर्यातु रामः सह लक्ष्मणेन ॥२४॥

एवं वशिष्ठेन प्रतिष्ठापितधृतिर्दशरथः सुतप्रदानेन कुशिकसुतमनोरथमेव पूरयामास।

योगेन लभ्यो यः पुंसां संसारापेतचेतसाम्।
नियोगेन पितुः सोऽयं रामः कौशिकमन्वगात् ॥२५॥
तत्र सत्रं परित्रातुं विश्वामित्रो महामुनिः।
सौमित्रिसहितं रामं नयन्नयमवोचत ॥ २६ ॥
बलेन तपसा लब्धे बलेत्यतिबलेति च।
विद्येते मयि काकुत्स्थ! विद्ये ते वितरामि ते ॥२७॥

ततः परिगृहीतविद्यस्य दाशरथेः प्रदेशमेकं प्रदर्श्य भगवानित्थमकथयत्।

अस्मिन् पुरा पुरभिदः परमेश्वरस्य
फालाक्षरानलनयनज्वलने मनोभूः।
सद्यः प्रपद्य शलभत्वमसुत्यजाङ्गं
तस्मादमुं जनपदं विदुरङ्गसंज्ञम् ॥ २८ ॥

तदनु मानससरःप्रसूतां सरयूमतिक्रम्य वृत्रवधप्रहृष्टहृद-
श्रवःपङ्कक्षालनलब्धमलदकरूषकनाम्नोर्जनपदयोः शोभि-
तकृतपदयोर्दाशरथ्योः पुनरप्येवमब्रवीत् ।

यक्षः सुकेतुर्द्रुहिणप्रसादाल्लेभे सुतां कामपि ताटकाख्याम् ।
सुन्दः किलैनां परिणीय तस्यां मारीचमोचं जनयाम्बभूव ॥३९॥

एकदा तु सुन्दे निहते मारीचः कुम्भसम्भवमुनिमभिभूय तस्य शापादवाप कौणपतां ताटकाप्यासीत् पुरुषादिनी । सेयमाजन्मसिद्धसिन्धुरसहस्रप्राणा जनपदविपदं विदधाना व्यापादनीया त्वयेति । किञ्च । वैरोचनीं मन्थरां वसुन्धरापराधधुरन्धरां पुरन्दरेण निहतां जनार्द्दनकृतादेनाश्च भार्गवजननीं प्रदर्श्य दाशरथेरमन्दां सुन्दवधूवधविचिकित्सामुत्सादयामास ।

शास्त्रतः श्रुतवत्त्वे न तेन सुन्दप्रियावधः ।
तमेवान्वददस्य चापः शिञ्जारवच्छलात् ॥ ४० ॥

तत्काले पिशिताशनाशपिशुना सन्ध्येव काचिन्मुने-
रध्वानं तरसा रुरोध रुधिरश्चोतारुणा दारुणा ।
स्वाधीने शमने पुरीं विदधती मर्त्यैः स्वकृत्यात्ययात्
उत्किङ्करसङ्कटमहाशृङ्गाटका ताटका ॥ ४१ ॥

यथा दाशरथेः कर्णमविशत्ताटकागुणः ।
तथा धनुर्गुणस्तूर्णमविशत्तज्जिघांसया ॥ ४२ ॥

ततो भाविनि संग्रामे बद्धस्पर्धस्य ताटका ।
स्वप्राणै रामबाणस्य वीरपानमकल्पयत् ॥ ४३ ॥

मुनिः कृशाश्वोपज्ञानि ताटकामाथिने ददौ ।
शस्त्राणि जृम्भकादीनि जम्भशासनशासनात् ॥४४॥

तत्र कश्चन विरिञ्चिलोकप्रत्यादेशं प्रदेशमेकं प्रदर्श्या-वोचदुपचीयमानपरमहर्षो महर्षिः ।

प्रतिदिनमवदातैर्ब्रह्मभिर्ब्रह्मनिष्ठैः
प्रशमितभवखेदैः सादरं सेव्यमानः ।
बलिनियमनहेतोर्वामनः काननेऽस्मिन्
बलिनियमपरः सन् ब्रह्मचारी चचार ॥४५॥

अपि च

अपहृतविबुधार्तेर्वामनव्याजमूर्ते-
रखिलभुवनभिक्षोराश्रमानोकहानाम् ।
ततिरियमतिनीला व्याप्तदिग्व्योमसीमा
स्वयमपि परिमातुं लोकमभ्युद्यतेव ॥ ४६ ॥

इति विविधरसाभिः कौशिकव्याहृताभिः
श्रुतिपथमधुराभिः पावनीभिः कथाभिः ।
गलितगहनकृच्छ्रं गच्छतोर्दाशरथ्योः
समकुचदिव सद्यस्तादृशं मार्गदैर्घ्यम् ॥ ४७ ॥

ततः सिद्धाश्रमं प्रविश्य विश्वामित्रः सत्रमारभत । तद-नन्तरमन्तरीक्षान्तरालादापतन्तमन्तकानीकभयानकं पला-शगणमवलोक्य पलायमानाः करतलगलितपलाशसमित्-कुशाः कुशिकनन्दनान्तेवासिनः ससंभ्रममभिलषिता-हवाय राघवाय न्यवेदयन् ॥

इत्याद्यैः शिखराणि तानि पविताः चित्वा हसित्वा क्रुधा
ज्ञात्वा हस्तविघट्टनं तत इतः स्थित्वा नटित्वा मुहुः ।
सित्वा व्यामकलाकलाकलनया बद्ध्वा कचान् खेचरान्
दृग्भ्यामेः सहसा हसा निशिचरा वल्गन्ति रन्ध्रं दिवः ॥४८॥

तत्र

संज्ञान्तवर्णान्तरगाधिसूनोः
सम्पर्कपुण्यादिव रामभद्रः ।
स्थानक्रमात् पिप्पलदण्डयोग्यः
पलाशदण्डाहृतपाणिरासीत् ॥ ४९ ॥

मारीचनीचमतिराहवमाचरिष्य-
न्निन्नः क्षणेन रघुनायकसायकेन ।
मध्ये पयोनिधिभयेन निमग्नमूर्त्ति-
र्वेषं पुपोष जलमानुषनिर्विशेषम् ॥ ५० ॥

सुबाहुराहवोऽभ्यस्तः क्षणः काकुत्स्थपत्रिणा ।
मनोनामनभिप्रेतः प्रेतनाथातिथीकृतः ॥ ५१ ॥

वंशस्पृशा हृदयहारिफलान्वितेन
रामेरितेन रघुनायकसायकेन ।
स्नेहान्वितेन निरगादनुरागिणीव
प्राणावली हृदयतः पिशिताशनानाम् ॥ ५२ ॥

अथ निशिचरघातात्क्षान्तवैतानविघ्नो
मुनिरवभृथकृत्यं विश्वकृत्यं समाप्य ।
अमनुत जयलक्ष्म्या रामभाजो समेतं
यजनजनितमूर्त्यायोऽनुमध्याजलक्ष्म्या ॥ ५३ ॥

अथ मिथिलां प्रति प्रस्थितो विश्वामित्रः काकुत्स्थयो-रित्थमकथयत् । पुरा खलु कुशेशयासनजन्मा कुशिकाभि-धानो राजर्षिः कुशनाभकुशाम्बप्रमुखैश्चतुर्भिः कौशाम्बी महोदयधर्मारण्यगिरिव्रजाख्यानां पुरीणां कर्तृभिः पुत्रै-रभव । कुशनाभस्तु कन्याशतं घृताच्यामजनयत् । कन्या-

स्ताः समृद्धयौवनाः कामयमानः पवमानः प्रत्याख्यानात् प्रत्यापन्नमन्युरात्मानमवयवैर्व्यनार्जवमतनुत । अथ विदित-वृत्तान्तेन कुशनाभेन तेन क्षमामेव प्रतिक्रियां मन्वानेन चूलिसूनवे सोमदत्ताय राज्ञे ब्रह्मदत्ताय प्रदत्ताः स्ताः प्रकृतिस्थाः बभूवुः । पुनरपि कुशनाभस्तु पुत्रीयन् पितृ-प्रसादादगाधवत्सलात् गाधिसंज्ञानत्मातपादानुदपादयत् । इत्थं दाशरथिः कौशिकोत्पत्तिकथानिशमनेन निशाया-मायामिनीमनुभूय बन्धूकस्तबकबन्धुरेण सन्ध्यारागेण प्राचीमुखे शोणीकृते शोणाभिधानं दधाने नदे प्रवर्त्तित-प्रत्यूषः कृत्यः कृतनियमेन मुनिना सह गङ्गामुपतिष्ठमा-नेन पथा प्रातिष्ठत ।

आजानपावनश्रीरां हर्षानन्दविधायिनीम् ।
श्रुतिप्रणयिनीं सोऽयमापगामापगामिव ॥ ५४ ॥

अथ भागीरथीकथां श्रोतुकामाय रामाय भगवानित्य-मभाषत ।

पुरा तु मेनका नाम सुमेरोरभवत् सुता ।
गृहमेधी तयैवासीच्चक्रवर्त्ती धराभृताम् ॥ ५५ ॥
कन्याद्वयममुष्याश्चादिका मन्दाकिनी तयोः ।
अन्या भगवती साक्षाच्चन्द्रचूडकुटुम्बिनी ॥ ५६ ॥
तां नदीं विबुधा लब्ध्वा नाकलोकमनीनयन् ।
तपस्यन्तीं गिरिर्गौरीं देवाय भवते ददौ ॥ ५७ ॥
शिवयोर्युञ्जतो वीर्यं भुक्त्वा धात्रा समर्पितम् ।
पावकः प्रतिजग्राह देवैरनुमोदितः ॥ ५८ ॥
अनपत्यामनस्कान्तां भर्तृभार्यां च मेदिनीम् ।

अकरोदम्बिकाकोपः पुत्रालाभसमुद्भवः ॥ ५९ ॥
अथ सेनान्यमिच्छद्भिरुक्तः सप्तर्षिभिः सुरैः।
वह्निरक्षाय जाह्नव्यां न्यषिञ्चद्वीर्यमैश्वरम् ॥ ६० ॥
सापि सप्तार्चिषा क्षिप्तं तेजस्तत्सोढुमक्षमा।
हिमवत्प्रान्तकान्तारे शान्ताशरवणे जहौ ॥ ६१ ॥
तत्राभूत् कृत्तिका प्रीत्यै पीताकृष्टमुखाम्बुजम्।
तारकध्वान्तविध्वंसि सद्यः षाण्मातुरं महः ॥ ६२ ॥
त्रैविध्यं श्रूयतां वत्स ! चरितस्त्रिदिवौकसाम्।
यथोक्तं हव्य मन्त्रस्था देवताया इवाध्वरे ॥ ६३ ॥
पुरीमयोध्यामध्यास्त सावित्रः सगरो नृपः।
केशिनी सुमतिभ्यां च लक्षित प्रथमाश्रमः ॥ ६४ ॥
सपुत्रीयन्सपत्नीकस्तपस्तेपे हिमालये।
भृगुः प्रीतमनास्तस्मै ददौ दायादसम्पदम् ॥ ६५ ॥
असमञ्जसुतं लेभे वैदर्भी केशिनी तयोः।
षष्टिं पुत्र सहस्राणां सुमतिश्च यशोयशी ॥ ६६ ॥
असमञ्जसचारित्रमसमञ्जमपास्य सः।
आरब्धहयमेधः सन्नमुञ्चत तुरङ्गमम् ॥ ६७ ॥
क्रव्यादवपुषा सोऽगमहारि हरिणा हयः।
ततस्तमष्टमन्विष्टुं सौमतेयाः प्रतस्थिरे ॥ ६८ ॥
सर्वे सपर्वतामुर्वीं खनतः सगरात्मजाः।
चक्रुर्भर्भरितध्वान्तं नागलोकं नखांशुभिः ॥ ६९ ॥
तपते तपसान्दीप्ते तमस्तोयप्रमाथिनि।
कापिले ज्वलने वीरा लेभिरे शलभोपमाम् ॥ ७० ॥
असमञ्जसुतं पौत्रमंशुमन्तमथाब्रवीत्।

सप्तिं हृत्वा समाधत्तां सप्ततन्तुं भवानिति ॥ ७१ ॥
सोऽपि गत्वा बिलं तत्र दृष्ट्वा भस्मीकृतान् पितॄन् ।
सास्रुस्तेभ्यो जलं दित्सुश्चिरान्निन्ये तुरङ्गमम् ॥ ७२ ॥
मातुलो गरुडस्तेषामेनं तत्रैवमब्रवीत् ।
गङ्गामिहानयायुष्मन्नेषामेषा गतिः परा ॥ ७३ ॥
ततस्तनयवृत्तान्तं श्रुत्वा लब्धतुरङ्गमः ।
समाप्य सगरः सत्रं पुत्रशोकाद्दिवं गतः ॥ ७४ ॥
अथांशुमानयं राज्यं चिराय परिपालयन् ।
दिलीपे न्यस्तभूभारस्तपस्तेपे हिमालये ॥ ७५ ॥
दिलीपेऽपि दिवं याते श्रुत्वा वृत्तं भगीरथः ।
पितॄन् विधातुं सुगतीन् विदधे मतिमान्मतिम् ॥ ७६ ॥
अमर्त्यसरितं कर्तुं मेने मर्त्यतरङ्गिणीम् ।
ततो गोकर्णमासाद्य तपस्यति भगीरथे ॥ ७७ ॥
दिवो देवापगां वोढुमन्वमंस्त दयानिधिः ।
अथ वीचीचयच्छन्नदिगन्तगगनान्तरा ॥ ७८ ॥
शशाङ्कशङ्कसम्भिन्नतारामौक्तिकदन्तुरा ।
तरङ्गाकृष्टमार्तण्डतुरङ्गाया सिताकणा ॥ ७९ ॥
फेनच्छन्नाभ्रमातङ्ग मार्गणाव्यग्रवासवा ।
आविःशाखिशिखोन्नेयनन्दनद्रुमकर्षणा ॥ ८० ॥
एकोदका नभोमार्गे दिङ्मूढदिवसेश्वरा ।
आवर्तगर्तसंभ्रान्तविमानप्लवविप्लवा ॥ ८१ ॥
नीलजीमूतशैवालक्षतलेखाहरित्तटा ।
अवलेपभराक्रान्ता सुरलोकतरङ्गिणी ॥ ८२ ॥
पपात पार्वतीकान्तजटामण्डलगह्वरे ।

अलक्ष्यनिर्गमा शम्भोः कपर्दादमरापगा ॥ ८३ ॥
दधौ दूर्वाशिखालग्नतुषारकणिकोपमाम्।
अदृष्ट्वा तान् नदीं तत्र तुष्टाव परमेश्वरम् ॥ ८४ ॥
भगीरथो विधेः क्रौर्य्यात् परिक्षीणमनोरथः।
गङ्गा समाकृतिर्जाता न्यपतद्धरमूर्द्धतः ॥ ८५ ॥
तेन स्तुत्या प्रसन्नेन त्रिधा बिन्दुसरस्यपि।
तासु प्राचीं गतास्तिस्रस्तिस्रः प्राचेतसोऽन्दिशम् ॥८६॥
अन्या पितृक्रियायुक्ता भगीरथरथानुगा।
सैषा भागीरथी जह्नोः सत्रेष्वं समाहृणोत् ॥ ८७ ॥
तां स पीत्वा ततः श्रान्तो जह्नौ श्रोत्रेण वर्त्मना।
तया तटिन्या जाह्नव्या प्रापय्य त्रिदिवं पितॄन् ॥८८॥
भगीरथः पुरं प्राप परिपूर्णमनोरथः ॥ ८९ ॥

अथ दाशरथिराकर्णितभागीरथीकथस्तां सरितं विलङ्घ्य विशालां पुरीं विलोकयन् कस्येयमिति गाधिनन्दनमपृच्छत्। सोऽप्येवमवोचत्। पुरा खलु सुरासुराणां सुधानिमित्तं मिथोविरोधे प्रवृत्ते मायां विश्वमोहिनीं विश्वरूपः प्रदर्श्य दैतेय निधनं शतधारपाणिना कारयामास। तेषां तु जननीदितिरतिविन्नमभ्युपेतमन्युः शतमन्युशासनं कमपि पुत्रं लब्धुकामा पत्युर्मरीचेर्वचनात् कुशप्लवने सुचिरं तपश्चचार। तां कैतवेन शुश्रूषमाणः शक्रः शतधारपाणिः पादकलितकेशकलापामापन्नं निद्रामपवित्रेति निर्वर्ण्यावगाहिततदीयजठरः सप्तधा गर्भं निर्भिद्य निर्जगाम। दितिरपि विदिततनयकदना तान्यपि खण्डान्याखण्डलेन सप्तमरुतः कारयित्वा त्रिविष्टपं प्रविष्टा। ततः।

अलम्बुषायामिक्ष्वाकोर्जातः कश्चिन्महीपतिः ।
विशालः स्वेन नाम्नात्र विशालां विदधे पुरीम् ॥ ८० ॥

तदनु ।

तद्वंशस्थेन सुमतिनाम्ना नृपतिना कृतातिथ्यः सराजपुत्रो विश्वामित्रस्तत्र निशिथिनीं नीत्वा मिथिलां प्रतिप्रस्थितः प्रतपस्तासुत्तमस्य गौतमस्याश्रमं प्रदृश्य तद्दारानुषक्तां कथामित्थमकथयत् ।

अत्रागमद्गौतमधर्म्मदारानमार्गजुष्टेन पथा महेन्द्रः ।
क्रुद्धस्ततो निर्वृषणं वृषाणां भार्य्यामदृश्याञ्च मुनिश्चकार ॥ ८१ ॥

वनमेतद्गते रामे शापान्मुक्ता भविष्यसि ।
इत्युक्त्वा गौतमः पत्नीं हिमाद्रिं तपसे ययौ ॥ ८२ ॥
ततो विदितवृत्तान्ते देवतानां गणे तदा ।
पितॄणां प्राभवान्मेषे मेषस्य वृषणं वृषा ॥ ८३ ॥
तद्रामागमनमो मुक्तां प्रतिगृह्णातु गौतमः ।
इति तस्याश्रमं भेजे साकं रामेण कौशिकः ॥ ८४ ॥

ततः । दुःखे सुखे च रज एव बभूव हेतु-
स्ताद्दग्विधे महति गौतमधर्म्मपत्न्याः ।
यस्माद्गुणेन रजसा विकृतिं गता सा
रामस्य पादरजसा प्रकृतिं प्रपेदे ॥ ८५ ॥

तस्मिन्नहल्यया कृतमातिथ्यं विश्वामित्रः स राजपुत्रः प्रतिगृह्य मिथिलोपकण्ठभुविजातं जनकयजनभवनमभजत । तदनु जनकेन विधिवदभ्यर्थिते तस्मिन् कुशिकसुते निमिकुलपुरोधाः शतानन्दो रघुनन्दनमेवमभाषत ।

तिष्ठन्नुपलाङ्गहत्तौ मुनिरगमदसावाश्रमं ब्रह्मसूनो

रातिथ्यं तत्र लब्ध्वा निरवधिसुरभिप्राभवाद्विस्मितेत्य ।
सोऽनेन प्रार्थितोऽभूत्तदनु मुनिवरे नाभ्युपेते [redacted] कर्षन्
क्रोशन्तीं तां तथैव प्रचुरबलजुषा कां दिशौको बभूव ॥ ९६ ॥

बहुशस्तद्दलचकितस्य तपोबलाधिगतविविधायुधनिगमस्य सुरभिनिमित्तं भूयोऽपि समारब्ध सङ्गरस्य दिव्यास्त्रपरम्परां ब्रह्मदण्डेन निरुन्धन्नरुन्धती जानिरवतस्थे । ततोऽयं जातव्यलीकः चात्त्रतेजसः परं ब्राह्ममेव महीमन्वीय इति निश्चित्य तत्सिद्धये दक्षिणस्यां दिशि तीव्रतरं तपश्चचार । अथ सावित्रः क्षत्रियस्त्रिशङ्कुः सशरीरः स्वर्गसिद्धिं प्रार्थयमानो वशिष्ठेन प्रत्याख्यातस्तस्य पुत्रैर्महोदयादिभिर्निबन्ध कुपितैर्दत्तचण्डालभावस्तमेनं शरणमभजत । असावपि तन्मनोरथपूर्तये क्रतुमेकं कर्तुं प्राक्रमत । तत्र समागतेषु ब्राह्मणेषु त्रिशङ्कुयजनेनागतान् वशिष्ठपुत्रानयं शापेन श्वभक्षकानकरोत् । तत्र क्रतुभुजां वर्गोऽपि स्वर्गादनवतीर्णः ।

अयं महात्मा तपसः प्रभावादारोपयामास दिवं त्रिशङ्कुम् ।
नीलाम्बरं निष्कुतराजतेषु वर्षा निशीथादविशेषवेषम् ॥ ९७ ॥

ततः ।

अपातयत् स्वर्गमुपाश्रयन्तं सञ्जातमन्युः शतमन्युरेनम् ।
ततोऽवलम्ब्यास्य नियोगशङ्कुं लेभे त्रिशङ्कुर्गगने प्रतिष्ठाम् ९८

ततः सर्वगीर्वाणगणप्रार्थनया परित्यक्तभुवनान्तरनिर्माणकर्मा तत्र तपः प्रत्यूहः प्रत्यङ्कूत इति पश्चिमायां दिशि पुष्करे पुष्कलं तपश्चरन्तममुमम्बरीष यज्ञपशुविनाशप्रायश्चित्तार्थं बह्वीभिर्गोभिः क्रीत्वा नरपशुतां नीयमानस्ताव-

इक्ष्वाकस्य मध्यमपुत्रः शुनःशेपः शरणमयाचत। अयं भगवान्निजतनयविनिमयेन रक्षितुमेनमुन्मुखः पराङ्मुखेभ्यस्तेभ्यो हविष्यन्दादिभ्यः शापेन वशिष्ठपुत्र दशां दत्त्वा गाथाद्वयप्रीताभ्यामिन्द्रोपेन्द्राभ्यामम्बरीषं शुनःशेपं च परिपूर्णमनारथौ कारयामास।

ततः तपस्यन्तमेनं मेनका सङ्गतस्तपोभङ्गश्चिरमङ्गो चकार। ततः पश्चात्तापाभिभूतोऽयमुत्तरे भूभृति कौशिकीतीरे घोरं तपश्चचार। तत्र जम्भारिप्रहितां रम्भां शैली भवेति शप्त्वा पूर्वस्यां दिशि निरस्तनिःश्वासं तपश्चरन्नमृषिजनगणा तपोऽस्मेकद्विमानासम्नामरमासनः सन्निधाय जितेन्द्रियत्वात् ब्रह्मर्षिरसि वसिष्ठोऽप्येवं व्याहरतु भवन्तमित्यभाषत।

असौ वसिष्ठनिर्देशाद् ब्रह्मर्षित्वमविन्दत।
अथोपनय संस्काराद्विजन्मा ब्रह्मवर्चसम्॥ ९९॥

इति जनकपुरोधः श्लाघिता गाधिसूनुः
सह नृपतनयाभ्यां शर्वरीं तत्र नीत्वा।
विधिवदहिमदद्र्घ्यं पुष्पदर्भोपगर्भं
सरसिजदयिताय ज्योतिषे छान्दसाय॥ १००॥

तदनु जनकराजधानीं रामलक्ष्मण निरीक्षण कौतुकादनवरतपातितैन विकचकुवलय निचयोपचीयमानमेचक मरीचि वीचि मलिम्लुचेन पौरनारी जनविलोचनरोचिषा कर्बुरितनरपति पथां विश्वामित्रः प्रविश्य दशरथतनया वित्थमभाषत। अस्यां खलु नगर्यामारब्धयज्ञस्य राज्ञो जनकस्य भागधेयात् सीता नामधेय भाजनमजीजनत् कन्या-

रत्नं रत्नगर्भा भगवती । तस्याः पुनः किं परं किमपि माहात्म्यम् । यतः ।

यस्याः पृथ्व्यावसनमुदधिः पीठिका हाटकाद्रि-
र्हारः सिन्धुः सगरतनयस्वर्गमार्गैकबन्धुः ।
क्रीड़ा शैलः परमपुरुषक्रोड़दंष्ट्रा च तस्याः
सीतामातुर्जगति मिथिलां सूतिकागेहमाहुः ॥ १०१ ॥

अत्र सीता विवाहार्थममरैरपि दुष्करम् ।
जनकः कल्पयामास धनुरारोपणं पणम् ॥ १०२ ॥

ततो महर्षिर्जनकस्य राज्ञः सभां सुधर्मां सदृशीं प्रपेदे ।
तौ चापतुल्यापविलोकलोलौ सचापलौ कोसलराजपुत्रौ॥१०३

तत्र विधिवदभ्यर्चितः कथितदशरथतनयवृत्तान्तः कौशिक प्रमुखैरमरैरस्मत्कुले महत्तरे देवराते निचिप्तं विशेषतः सीता शुल्कार्थं मया रक्षितमिदमिति जनकेन प्रदर्शितस्य चापस्यारोपणे राममादिदेश ।

रामे बाहुबलं विहस्वति धनुर्वंशे गुणा रोपणं
नाभूत्केवलमात्मना तिलकिते वंशेऽपि वै कर्तने ।
आकृष्टं नितरां तदेव न परं सीता मनोऽपि द्रुतं
भङ्गस्तस्य न केवलं क्षितिभुजान्दोष्णभदम्भस्य च ॥१०४॥

रामाकर्षण भग्नकार्मुकभुवाध्वानेन रोदोरुधा
दृप्तक्षत्रयशः सितच्छदकुले जीमूतनादायितम् ।
वीरश्री प्रथमप्रवेशसमये पुण्याहघोषायितं
मैथिल्याः किल मानसे परिणये माङ्गल्य तूर्यायितम्॥१०५

रवः कठिनकर्षणत्रुटित चापजन्मा क्षणा-
द्दिशां द्विरदफीत्कृतैः कृतहरित्पति स्वागतः ।

अगदच्छमथाकौतुकोच्चलितरामकौत्वङ्गना
प्रयाणपटहध्वनिं प्रथयतिस्म ताराध्वनिः॥ १०६ ॥

तत्र सीता परिणयकृतनियमजनकप्रहितदूताहूतः पुरोहिताभ्युपगमान्मिथिलामुपागमद्दशरथः।

यत्कीर्तिस्तिलकायते सुरवधूसङ्गीतगोष्ठीमुखे
येनाद्यः पितृमान् पुमान् वसुमती येनैव राजन्वती।
इन्द्रः सङ्गरसङ्कटेषु विजहौ वीरस्य यस्योन्मुख-
प्रेङ्खत् स्यन्दनकेतनाम्बरदशासंदर्शनाद् दुर्दशाम् ॥१०७

ततः जनकः स्वकनीयांसमाजुहाव कुशध्वजम्।
हत्वा युधि सुधन्वानं साङ्काश्ये स्थापितं पुरे॥ १०८ ॥

तदनु ताभ्यामभ्यर्चितः स पुरोहितो दशरथस्तत्र पुत्राणां गोदानमङ्गलं निर्वर्तयामास।

जग्राह जनकात्सीतां तातादेशेन राघवः।
आम्नाय शासनेनार्चां यजमानादिवानलः॥ १०९ ॥

आश्चर्यमेतत्।

गुणमनिमिष चापे कश्चिदारोप्य सीतां
कुशिकतनयवाक्यादग्रहीद्रामभद्रः।
तदनु तदनुजन्मा मैथिलेन्द्रस्य चित्ते
निहितबहुगुणःसन्नूर्मिलां लक्ष्मणोऽपि॥ ११० ॥

ततो भरतशत्रुघ्नौ कुशध्वज नियोगतः।
माण्डवी श्रुति कीर्तिभ्यामभूतां यज्ञसेविनौ॥ १११ ॥

अथ दशरथः स्वतनयैः सह कृतविवाहैर्विदेहेभ्यः प्रतिनिवर्तमानो दुर्निमित्तदूयमानान्तरङ्गः संवर्तसमयसमुज्जृम्भितहुतवहदुःसहरोषभीषणं दुर्वारपराक्रमं क्षत्त्रवर्गगर्व-

सवेगपतदखिलधाराधीशरुधिरधारा परिकल्पितपितृतर्पणं
दर्पवतामपि सरं समुदग्रप्रतापं तपः समुचितवल्कलमथव-
सनं वसानमपि क्षात्रभावभासा दहन्तं परिमुषितयुद्धश्रद्धं मध्ये
मार्गं भार्गवमुनिमन्विष्ट रामभद्रमद्राक्षीदप्राक्षीच्च। तन्नि-
रीक्षणादिव प्रक्षीणहर्षोऽपि महर्षिभिः सह विधाय सपर्या-
मार्यमौलिः कुशलमन्वयुङ्क्त ।

अथ दशरथवाणीस्ता मशृण्वन् प्रसर्पी
भृगुपतिरिदमूचे प्रस्थितं रामभद्रम् ।
अवजिगमिषु रामं जीर्णचापात्तकीर्ते
रविदितपरमोस्ते दोर्मदं कार्मुकेऽस्मिन् ॥ ११२ ॥

आदाय तत्सगुणमाशु विधाय तत्र
सन्धाय बाणमवधार्य तपोधनत्वम् ।
तज्जीविताय इव मानमना मनीषी
सद्यस्तपोरसमराद्विरराम रामः ॥ ११३ ॥

तावुभौ च भृगुवंशसम्भवौ चापदण्डजमदग्निसम्भवौ ।
प्रश्रभावमवलम्ब्य केवलं राघवार्पितगुणौ बभूवतुः ॥ ११४ ॥

युगपत्प्राप्तगुणयोश्चापभार्गवयोस्तयोः ।
ऋजुता वक्रतां प्राप वक्रतापि तथार्जवम् ॥ ११५ ॥

ततस्तत्क्षणममोघेन राघवः शरेण भार्गवस्य स्वर्गगतिं
रुरोध । स्थाने हि तत् ।

नूनं जनेन पुरुषे महति प्रयुक्त-
मागः परन्तदनुरूपफलं प्रसूते ।
ज्ञात्वा रघूद्वहगतेः क्षणमन्तरायं
यद्भार्गवः परगतेर्विहतिं प्रपेदे ॥ ११६ ॥

अथ संक्रान्तया जामदग्न्यशक्तिसम्पदा सम्भ्रमभाग-
परिहृतभीमभुजाभिराममविरलपुलकमालिङ्ग्य मूर्ध्न्युपाघ्राय
दशरथः परिखयेव परिसरन्त्या सरय्वा सरितानुविद्धा-
मयोध्यां दारकान् सदारान् सादरमवलोकयन्तीनां पौर-
पुरन्ध्रीणां निरन्तरितगवाक्षैः कटाक्षैः सौन्दर्यं वर्षितलापिच्छैः
पिच्छातपत्रायमाणधवलातपत्रः प्रविवेश ।

तत्र । लज्जावशादविशदस्मरविक्रियाभि-
स्ताभिर्वधूभिरतिवेलमवाप्तसौख्यान् ।
इक्ष्वाकुनाथतनयान् प्रथमो रसानां
तारुण्ययोगचतुरश्चतुरः सिषेवे ॥ ११७ ॥

विद्ययेव नयो हृद्यो दर्भपत्राग्रधीः सुधीः ।
राजपुत्र्या तया रामः प्रपेदे प्रीतिमुत्तमाम् ॥ ११८ ॥

इति श्रीविदर्भराजविरचिते चम्पूरामायणे बालकाण्डं
समाप्तम् ।

---

अथ अयोध्याकाण्ड प्रारम्भः ।

गच्छता दशरथेन निर्वृतिं भूभुजामसुलभां भुजाबलात् ।
मातुलस्य नगरे युधाजितः स्थापितौ भरतलक्ष्मणानुजौ ॥१॥

अथ दशरथः पुत्रं रामं स्वतस्त्रिजगत्पतिं
स्वविषयमहीमात्रे कर्तुं पतिं विदधे मतिम् ।
भुवनभरणे क्लृप्तं कल्याणभूधरमादरात्
स्वगृहपटलीधुर्यस्तम्भं विधातुमना इव ॥ २ ॥

तदनन्तरमसौ संमन्त्र्य मन्त्रिभिः सह पौरवृद्धान् वृद्ध-

अथ पुरोधसः समीपं पुरोहितान् समाहूय समादिदेश। विदितमेव हि भवतां शिवतातिमेव मतिं दधानाः सुपथा सुसञ्चरमाणाः प्राणिनामन्वयमानमानसाः मानधनाः अयथाः संसरणि संमार्जनजागरूकाः जन्मोपतापमार्जनपराः परां निर्वृतिमुपेत्य देवभूयङ्गताः सर्वे नः पूर्वपुरुषा इति। तस्मादस्माभिरप्येतेषां सरणिमनुसरमाणैरेतावन्तं कालं परिपालिताः किल सकलाः प्रजाः प्रमाणमत्र परिपालनक्रियामनुभवन्तो ननु भवन्तः। एवं भवतामभ्युपगतानां निगमानां वा प्रतीपगामिनीं पदवीं न प्रत्येति खलु लोकस्तदस्ति किञ्चिदभ्यर्थनीयम्।

मम सुरनरगीतख्यातिभिर्हेतिभिर्वा
दिवि भुवि च समानप्रक्रमैर्विक्रमैर्वा।
नियतमपरिहार्या या जरा सा मदङ्गे
विकचकमलखण्डे चन्द्रिके वा विरासीत्॥ ३॥

तस्मात्समस्तक्षत्रवर्गगर्वपाटनपटुधारा परश्वधभरणाभीषणविषभागविभङ्गादपरिच्छिन्नतरशौर्यशालिनि सौजन्यभाजने जनानुरागनिलये निर्मत्सरे मत्तमेव वत्सेऽस्मिन् विश्वम्भरा भारं चिरकालधार्यमाणमार्यैरमात्यैरनुमतः सन्नवतार्य विश्रान्तिसुखमनुभवितुमभिलषामीति। ततः प्रावृषेण्यपयोवाह व्यूहस्तनितमादाकर्ण्य समुदीर्णनिरतिशयाह्लादनिसर्गनिरर्गलनिर्गलत्केकालापिनः कलापिन इव जनाः प्रमदभवकलकलरवमुखरितहरिन्मुखा बभूवुः।

आनन्दबाष्पविसरो नयने प्रजाना-
माविर्बभूव मकरन्द इवारविन्दे।

रामस्य कान्तिमभिषेकदिने भविची
प्रत्याश्य चक्षुरिव वीक्षितुमादरेण ॥ ४ ॥

राजापि तेषां सम्मत्सम्मान महोत्सवोत्सुकजनसंमर्द-जनिष्यमाणरजो राजिप्रातपरिजिहीर्षयेव रोमाञ्च प्रपञ्चेन कञ्चुकिताङ्गानां प्रमाणातीतां प्रीतिं प्रपन्नानां हर्षप्रकर्षेण द्विगुणीकृतमानन्दमन्तर्नियम्य सुमन्त्रप्रमुखान् मन्त्रिमुख्या-नेव माचख्यौ।

अस्मानमाश्रित तपोवनभूमिभागान्-
उन्मुच्य मार्गपरिपालनमागतान्।
अज्ञानमौग्ध्यमचिराद्वलम्ब्य राम-
मेवंविधः कथमुदेति जनानुरागः ॥ ५ ॥

तेऽपि नियमितनिजमनोरथाय दशरथाय सविनयमेवं व्यजिज्ञपन्।

देवे स्थितेऽपि तनयस्तव रामभद्रं
लोकः स्वयं भजतु नाम किमत्र चित्रम्।
चन्द्रं विना तदुपलम्भनहेतु भूतं
क्षीरोदमाश्रयति किं तृषितश्चकोरः ॥ ६ ॥

तदनन्तरं तत्र तत्त्वविदांवरस्य वसिष्ठस्य शासना-दभिषेकोपकरणाहरणाय सामात्यः पौरवर्गः।
आहूय रामं विनयाभिराममाविः प्रमोदप्रभुरेवमूचे।
तवोत्तमाङ्गे मुकुटं विधातुमङ्गाय तिष्ये दिवसे यतिष्ये ॥७॥

अथ दशरथमनोरथं कौसल्यायै निवेद्य स्वभवनमुप-गतस्य रामस्य भगवान् वसिष्ठः सञ्जातकौतुकः कौतक-मङ्गलं निर्वर्तयामास।

आपूरयन् मङ्गलतूर्यघोषैरामाववाश्चा वल्लभकर्णतालान् ।
उज्जृम्भितः कोऽपि निरामभूमिरुद्धनरसः पौरजनातिमोदः॥८॥

तत्र । यामेवाहुर्निखिलचरकुलोन्मूलने मूलहेतुं
यस्याश्चित्तं प्रकृति कुटिलं गात्रमित्थं बभूव ।
अम्भोजिन्याः शिशिरसरितः कासरीवाच्छमध्यः
कैकेय्याः सा हृदयमदयं मन्थरा निर्ममन्थ ॥ ९ ॥

अलघुचलितझञ्झावातनिष्पेषदोषा-
दशनिरिव कठोरः शीतलाम्भोदपङ्क्तौ ।
अपहृतजनसौख्यान्मन्थराभेदवाक्या-
दपि भरतजनन्यां हन्त दौर्जन्यमासीत् ॥ १० ॥

सैषामन्थराभिधानपिशाचिकावेशपरवशनिजाशया पुरा दण्डके वैजयन्तपुरवास्तव्यशम्बरासुरसङ्गरसङ्गतखेदशापनोदनचेतनार्थमात्मनि वितीर्णवराय दशरथाय वरद्वयं न्यवेदयत् ।

तयोरेकस्य संरम्भो भरतस्याभिषेचनम् ।
अन्यस्य वन्यवस्त्येन वने रामस्य वर्तनम् ॥ ११ ॥

तस्मिन् क्षणे वरयुगं चपतन्नतास्य
नाराचवेधपरुषं श्रवसी विदार्य ।
सत्यप्रहाणचकितस्य नृपस्य काम-
मूरो चकार हृदये पुटपाकरीतिम् ॥ १२ ॥

तदनुतनयवार्त्ताभावसन्तप्यमाना-
दथ दशरथचित्ताचेतना निर्जगाम ।
दवहुतवहरोचिर्ज्वालया लिह्यमाना
झटिति गहनगुल्मादुज्जिहाना मृगीव ॥ १३ ॥

अथ दशरथः कथमपि लब्धसंज्ञः कैकेयीमभाषत ।

रामः काममुपाश्रयिष्यति वनं त्यक्ता धृतं कौतुकं
लोकस्त्यक्ष्यति कौतुकं चिरधृतं तस्याभिषेके कथम् ।
धर्मापायभयेन वत्सविरहं द्रक्ष्यामि वक्ष्यामि किं
यावत्कल्पमकीर्त्तिरार्त्तिजननी जायेत जायेतवा ॥ १४ ॥

वत्सं कठोरहृदये नयनाभिरामं
रामं विना न खलु तिष्ठति जीवितं मे ।
धातुर्बलादुपयमस्त्वयि जातपूर्वः ।
कैकेयि मामुपयमं नयतीति मन्ये ॥ १५ ॥

तदनु निजमनोरथैकपूरणे कृतादरा कैकेयी सोपहास-
मवादीत् ।

सत्यविप्लवमपत्यसङ्गतः सङ्गतं भ्रममपश्यतस्तव ।
आश्रुतस्य विफलत्वमस्ति चेदाश्रुतस्य रचितोऽयमञ्जलिः ॥ १६ ॥
किं नागतस्ते श्रवसोः सकाशमरिन्दमः सत्यगिरां पुरोगः ।
श्येनामिषीभूतकपोतपोतजीवातवे यस्तनिकृत्तगात्रः ॥ १७ ॥

किं च ।

अभ्यर्थकः कश्चिदुपाश्रिताय वितीर्य्य विप्राय विलोचने स्वे ।
आपूरयत्कश्चिदलर्कसंज्ञः प्राज्ञः प्रतिज्ञां प्रथितप्रभावः ॥ १८ ॥

असुरसमरवेलाजातबाधावसाने
वरयुगमदिशस्त्वं प्रीतिपूर्वं यथा मे ।
धृतिविमलगुणबन्धाः सत्यसन्धा नरेन्द्रा
जललिपिरिति कामं संगिरं तां गिरं ताम् ॥ १९ ॥

किं बहुना ।

सत्योद्यागिरमिहनिर्वहस्वभावा-

सम्मानं भुवि न सहेय रामभातुः ।
संस्थास्ये विषमुपभुज्य पश्यतस्ते
सत्याहं त्यजसि न चेत् प्रवर्त्तमानम् ॥ २० ॥

एवं वादिनीमेनां भूयोऽपि भूपतिरवदत् । अयि कठिनहृदये किमुक्तं मुक्तलोकमर्य्यादया दयापेतया त्वयेति ।

नैवाभवस्त्वमिह शीलवतीषु गण्या
नैवागमत्पितृमतां गणनां स रामः ।
नैवापमात्मजसुखान्यहमप्यनार्य्ये
नैवापमम्ब भरतेन न मे प्रदेयम् ॥ २१ ॥

किं च । वासस्त्वचां भवतु किञ्चन तारवीणां
छायाद्रुमाश्च भवनानि भवन्तु वन्याः ।
कैकेयि तस्य शयनानि कथं भवेयु-
स्त्वच्चेतसोऽपि कठिनानि शिलातलानि ॥ २२ ॥

एवं भर्त्रा भर्त्सिताप्यार्द्रचित्ता नाभूदेषा मन्थराक्रान्तवृत्तिः । राकाचन्द्रे राजमाने निशायां वीरुच्छन्ना चन्द्रकान्तस्थलीव ॥ २३ ॥

तदनु मुहूर्त्तमात्रमपि राममुखावलोकनसुखमनुबुभूषुर्दशरथः कुमारमानयेति सुमन्त्रमादिदेश । तेन सत्वरं राजभवनं प्रवेशितस्ततो रामः कृतप्रणामः पितरमयथाभूतमुखविकासमाराद्दालक्ष्य चकितमतिः किमिदमिति कैकेयीमन्वयुङ्क्त । सापि पापाशया प्रत्यवादीत् । वत्स ! प्रतिश्रुतवरद्वयनिर्बन्धने निपुणेतरस्तातस्ते सम्प्रति सानुशयस्तेनयथावाक्यत्वात् सत्यव्यत्यासत्रासाच्च गाढमगाधशोकसागरे निमज्जतीति । वरद्वयं तावत्तव वन्यवृत्त्यैव वने वर्त्तनं भवने रक्षणं भरतस्य चेति । रामस्तदाकर्ण्य प्रमुदित-

हृदयः कृताञ्जलिरेनां व्यजिज्ञपत् ।

भीतो भूभरतः किमम्ब भरतः किंवा वनात्पावनात्
त्रस्तोऽहं सगरान्ववाय ककुदस्तातः कुतः शोचति ।
दिव्यायाः सरितो निवापकरणाद्भवीं प्रतिज्ञामिमां
आवाभ्यामिह पूरयिष्यति न चेत् पुत्रो कथं स्यादयम् ॥२४॥

वनभुवि तनुमात्रत्राणमाज्ञापितं मे
सकलभुवनभारः स्थापितो वत्समूर्ध्नि ।
तदिह सुकरतायामावयोस्तर्कितायां
मयि पतति गरीयानम्ब ते पक्षपातः ॥ २५ ॥

किञ्च । तातः स्वनाचा व्यवहृत्य हृद्यं
वत्साभिषेकोत्सवमङ्गलं मे ।
प्रणामसंज्ञस्य ममार्पितस्य
किं पूर्णपात्रस्य न पात्रमासीत् ॥ २६ ॥

तत्क्षणमशनिहत इव पर्वतः सर्वतः परीतदवदहन इव वनस्पतिः दिवस्पतिपदभ्रंशविधुर इव नहुषः पपात निःसंज्ञः पङ्क्तिरथः । ततः सा पितृनिदेशविचारमचिरमाचरेति राममादिदेश । स एषः ।

मातुराज्ञां वहन् मूर्ध्ना मालामिव महायशाः ।
वनाय रामो वव्राज जगतामवनाय च ॥ २७ ॥

असौ समासाद्य कौसल्यासदनमभिषेकप्रतिबन्धं कैकेयी निर्बन्धमात्मनश्च वनवासं प्रणामानन्तरं तस्यै न्यवेदयत् । एतदाकर्ण्य विदीर्णहृदया विषदिग्धमुखशिलीमुखविद्धश्रवणयुगलेव सहसा भूम्यां निपत्य विललाप ।

रेखारथाङ्गसरसीरुहशङ्खचिह्ने

क्षेमङ्करे तव करे जगतां त्रयाणाम्।
कान्तारकन्दखननं रचयेति नून-
माबद्धवान् प्रतिसरं भगवान् वसिष्ठः॥ २८॥

तत्र सौमित्रिरतिमात्रप्रवृद्धमन्युः शतमन्युसमानमेन-मग्रजमकथयत्। आर्य्य! न कार्य्यमिदं लोकगर्हणीयायाः कैकेय्या वचसा जरसा च समाक्रान्तस्वान्ततया कृत्या-कृत्यविवेकमूकस्य राज्ञः प्रज्ञाग्रथितग्रन्थिःसृतेन वचसा सन्त्यज्य राज्यमटवीपर्य्यटनं विधातुम्। किन्तु तुभ्य-मनभ्यर्थ्यमानाय प्रथममेव पित्रा प्रदत्ता ननु पृथ्वी। क्षत्रधर्मोऽपि स्यात् पथः प्रमादोऽपि वर्णाश्रमरक्षणतः समीचीनः प्रायेण पुरुषं निश्रेयसे नियोजयेत्। नियतं नियतिर्बलमतिलङ्घ्य पौरुषमेव पुरुषस्य धीरस्य पुरुषार्थान् समर्पयेत्।

मा भूत्त्वत्पदपद्मयोररुणिमा कान्तारसञ्चारतः
पाणौ पाटलिमा मनाक् प्रसरतु ज्याकर्षणाद्विव मे।
कैकेयीपरिभूततातवचने नम्रो भवान्मास्म भूत्
किंवा मामकमार्य्यगौरवजलधे नम्रं धनुर्वर्त्तताम्॥२९॥

एवमाचक्षाणं लक्ष्मणं रामः सान्त्वयन्नेवावोचत्। वत्स! सवितृवंशजातानां पितृनिदेश एव देशिकः सर्वकर्मसु। वत्सः खलु पितृवचनगौरवात् गोहत्यामपि मातृवध-मपि तारुण्यविनयमपि ककुत्स्थरैणुकेयपूरुप्रभृतयः कुर्वाणास्तेऽपि निर्विचारमाचारवतामग्रगण्या इति गण्यन्ते। तस्माद्वक्ष्यं वश्य एव पितुरवगाहे गन्तुमिति। तत्र विस्तृतपत्रवात्सल्या कौसल्या तेन सह गन्तुमभिलषन्ती

कृतप्रणामेन रामेण सविनयमेवमभिहिता।

कान्तारभाजि मयि कैकयराजपुत्र्याः
कार्कश्यकन्दलितया दलितस्य वाचा।
तातस्य शोकदहनग्लपितं शरीरं
मातस्त्वया न तु कदाचिदुपेक्षणीयम्॥ २०॥

ततः सा तनयस्य स्वस्त्ययनाद् समस्तदेवताकीर्तन-पुरःसरीमाशिषमाचचक्षे। रामस्तामभिवन्द्य निष्क्रान्तः प्रक्रान्तनेपथ्यायाः सीतायाः प्रासादमाससाद।

कल्याणवादमुखितां सहसैव कान्तां
कान्तारचारकथया कलुषीचकार।
अम्भोदनादमुदितां विपिने मयूरीं
सन्त्रासयन्निव धनुर्ध्वनिना पुलिन्दः॥ २१॥

अथ सीतामुपगन्तुमुपक्रान्तामकथयत्।
प्रिये जनकनन्दिनि! प्रकृतिपेशलामीदृशीं
कथं ग्लपयितुं सहे तव शिरीषमृद्वीं तनूम्।
गृहीत हरिणीगणान्विकविसारि नानाशिरा-
क्षतिचरितशोणिताकणवनकानने कानने॥ २२॥

तदनु नानाविधप्रयत्नैर्रतनाप्यनुल्लङ्घितदाशरथिगमनाभिलाषायां मैथिल्यां लक्ष्मणेऽप्यनवसितानुगमनव्यवसाये वासिष्ठाय सुयज्ञाय भूपालमग्रे नागसहस्रेण सह शत्रुञ्ज-याख्यमतुलं मातुलदत्तं हस्तिनमगस्त्यकौशिकाभ्यां च महार्हाणि च रत्नानि वितीर्य निर्जराराातिवीर्यमुषी धनुषी निरपाय त्राणकर्मणी वर्मणी निर्मर्यादशिलीमुखक्षतानुषङ्गौ निषङ्गौ निर्वर्तितनीरपाणौ कृपाणौ वरुणेन जनकस-

दर्शि दत्तमेतत्सर्वमादाय मामनुगच्छेति सौमित्रिमन्वग्रहीत्। सीतापि निजाभरणगणमुपयन्तृपत्नीं विदधे। सौमित्रिरपि स्वधनेन कश्चित्कौसल्याश्रितमुपाध्यायमतोषयत्। तत्र सकुटुम्बाय त्रिजटाभिधाय द्विजातये स्वहस्तेन निक्षिप्तदण्डदेशावधिकं गोधनं काम्पिल्यादिभ्यो द्विजातिभ्यश्च रघुपतिर्वित्तानि विविधानि वितताार। ततस्ते पौरनारीणां विश्वासनिःश्वासजन्मानिलचलदधरकिसलयानामश्रुसलिलासारेण शोकपावकेन च वपूंषि मनांसि च सिक्त्वा दग्ध्वा च निषिद्धपरिजनानुगमनतया प्रकाशितप्रवासमिद्धान्ताच्छुद्धान्तान्निश्चक्रमुः। तत्र।

सीता पुरा गगनचारिभिरप्यदृष्टा-
मा भूदियं सकलमानवनेत्रपात्रम्।
इत्याकलय्य नियतं पिदधे विधाता
बाष्पोदकेन नयनानि शरीरभाजाम्॥ ३३॥

कदापि यान्तमनुगच्छति मैथिली मां
वत्सो जहाति न कदाचन लक्ष्मणोऽपि।
इत्येतयोरनुगतिं प्रतिबोध्य गन्तुं
भूयोऽपि राजभवनं प्रविवेश रामः॥ ३४॥

तस्मिन् सुमन्त्रेण विज्ञाप्य दर्शिते दाशरथौ भूपतिर्भूनाविष्ट इव विष्टरान्निपत्य सदारः सदारचितपरिदेवनोत्कण्ठा स्वयमपाकरोत्। तदा सुमन्त्रः कैकेयीमब्रवीत्। देवि! विरम विरम रामाभिषेकसमुत्थितावाह्लादाङ्कुरावग्रहादाग्रहात्। पुरा खलु ब्रह्मणो वरप्रसादादवगतसकलप्राणिभाषणतया पर्यङ्कपर्यन्तपरिसरत्पिपीलिका-

त्वापि कृतहासं तव पितरं हसनकारणं पृष्ट्वा तद्विवरणं प्रत्युमरणहेतुरित्यवेत्यापि भूयसो निर्बन्धात् कुपितेन रामावमानतायाः मातुस्ते मार्गं मा कुर्वीथा इति । ततः ।

ज्ञातासमञ्जनिर्यासं सगरं कैकयात्मजा ।
निदर्शनेन निर्दिश्य निरवधान्निजं पतिम् ॥३५॥

तत्र ।

सिद्धार्थको महामात्यस्तत्परित्यागमब्रवीत् ।
सरयूपतितानेकप्रजामरणकारणात् ॥ ३६ ॥

अथ दशरथेन रामः सपरिच्छद एव गच्छेति निर्दिष्टः केवलं खनित्रपिटके वल्कलयुगलं च प्रार्थयत् ।

सुवर्णाचितानां सुव्यक्तदिव्यलावण्यसम्पदाम् ।
त्रयाणामपि कैकेयी वल्कलादीन्युपाहरत् ॥ २७ ॥

अथ रघुकुलनाथो मध्यमाम्बानियोगा-
दुपवर्ति परिधाने मङ्गलार्हे निरासः ।
अधिकुचतटवल्गाम्लानको बाष्पसेका-
दपगतखरभावं वल्कलं पर्यधत्त ॥ ३८ ॥

तत्र ये चिरलोयन्तः सर्वं निर्विकारवदनलक्ष्मीक-मिक्ष्वाकुलाध्यक्षमध्यवस्यन्तस्तेषामेव शोकशङ्कुसङ्कीलित-मानसानामाननेषु पारम्पर्येणास्फुरद्विकारः ।

सवल्कले दाशरथौ विषादादामीलिताक्षो यदभूद्वसिष्ठः ।
तदेव जातं करणं महर्षेः काकुत्स्थयाथार्थ्यविलोकनस्य ॥३९॥

यस्य पीताम्बरत्यागे किं जाता विक्रिया पुरा ।
इति प्रत्यक्दृशा स्वेष्टो वसिष्ठो नातिविव्यथे ॥ ४० ॥

सोऽयं मैथिलीवल्कलधारणमरणदक्षणसारथिकृत-

शुकः। तत्र। प्रयाणाय प्रणिपतन्तीं स्नुषामाश्लिष्य कौशल्या गद्गदमवदत्।

घर्मे निदाघकिरणस्य करैः कठोरैः
कान्तारमध्यपदवीषु नखम्पचासु।
त्वां वीक्ष्य निम्नुलपदां वनदेवताभि-
र्निन्दिष्यते नियतमेव निमेषहानिः॥ ४१॥

अथ मैथिलीनाथः सलक्ष्मणः सप्रदक्षिणं राजानं जननीजनञ्च प्रणम्य प्रतिनिवृत्तप्रतिहारचक्रो निश्चक्राम।
रथो दशरथाज्ञापरतन्त्रेण सुमन्त्रेण द्वारि समानीतः।

प्रारब्धयात्रस्य रघूद्वहस्य प्रागेव सीता रथमारुरोह।
आनीतरथ्यं रथमारुरुक्षोरर्कप्रभोरग्रसरी प्रभेव॥ ४२॥

दाशरथी च रथमारुरुहतुः।

यथा यथा राघवराजधानीं विहाय सीता विपिनोत्सुकाऽभूत्।
तथा तथा जायत यातुकामा लङ्कां विना राक्षसराजलक्ष्मीः॥ ४३

आबालवृद्धमनुगच्छति रामभद्र-
मेषा पुरी तदियमा खलु निर्गुणा स्यात्।
इत्यादरादिव धरा बहुधा विधाय
धूलिच्छलान्निजतनुं तमनुप्रतस्थे॥ ४४॥

नृपसुखविमुखेन स्वेन कान्तेन साकं
दुहितरि विधिपाकात् काननाय व्रजन्त्याम्।
असुखमिति मत्वा नूनमङ्काय धात्री-
परिजनमुखवाष्पं पांसुभिः पर्यहार्षीत्॥ ४५॥

रामानुसारेच्छुनिर्गतपौरवर्गा
संस्थानमात्रस्फुटचत्वरराजमार्गा।

निर्मुक्तभोगभुजगत्वगिव क्षणेन
लघ्वीबभूव रघुपुङ्गवराजधानी ॥ ४६ ॥

अथ दशरथः सान्तःपुरजनः पुरान्निर्गत्य गत्यन्तराभावात् तमेव रामं सुचिरमवलोकयन्नालोकपथमतिक्रान्ते सुमन्त्राक्रान्तस्यन्दने रघुनन्दने स्यन्दमानबाष्पप्रवाहो मोहमुपगम्य भूम्यां पपात । ततः परिजनकृताश्वासाल्लब्धसंज्ञाय राज्ञे कौशल्यासदनमरोचत । दाशरथिरप्यहमहमिकया संमूर्च्छन्महाजनौघदुरवगाहतया मन्दायमानस्यन्दनवेगः सकलजनविवेककोकनदं मुकुलयन् मोहतमसा तमसातटमुपागमत् चरमगिरिशिखरमपि सहस्रदीधितिः ।

आविःप्रलापमटवीं भजतो जनस्य
काकुत्स्थपादविरहासहमानसस्य ।
आस्तीर्णपर्णशयनान्यभवन् गृहाणि
मूलस्थलानि तमसातटभूरुहाणाम् ॥ ४७ ॥

अथ निशीथे दाशरथिः सुमन्त्रेण संमन्त्र्य वञ्चितजनसंहतिरतिविनतानन्दनेन स्यन्दनेन वेदश्रुतिगोमतिनिष्यन्दिनी नाम नदी तत्र च परिष्कृतामिक्ष्वाकवे मनुना दत्तां वसुमतीमतीत्य विविधवनगहनवीरुत्पटलपिहितरथतुरगखुरमुद्रया पदव्या गङ्गातरङ्गसङ्गतमूलं गगनगङ्गालिङ्गितशृङ्गशृङ्गवेरपुरालङ्कारमिङ्गुदीपादपमुपागमत् । तत्र ।

दृष्ट्वा राममनेकजन्मरचितैर्भव्यं शुभैः कर्मभिः
श्रुत्वा मातृवरद्वयादुपगतां वृत्तिं च वैखानसीम् ।
नृत्यत्युत्थितहर्षशोकजनितैर्बाष्पैर्निषादाधिपः

सीतासीतगुणान्वितैरविरतैः संस्तूयमानोऽभवत् ॥ ४८ ॥

सोऽयं सुहृदमासाद्य गुहः कृताञ्जलिरञ्जसा रघुनाथमनुनाथितवान्। देव! पितृनियोगप्रवणान्तःकरणमपि भवन्तं विज्ञापयितुमज्ञातजानपदरीतिर्भारती मां मुखरयति। अस्त्येतदनिवार्यवीर्योद्भटभटवर्गदुर्गयुगमनुषक्तभोग्यजातमन्थरं मन्थराहृदयतोदावहमस्मदीयं राज्यम्। तदिदमनिशं प्रथमप्रवृत्तं परिगृह्य किञ्चिदनुगृह्य परिजनयोग्यभाजनमनुष्ठानमनुष्ठन्नेव तातादेशेन देशेऽस्मिन् विस्मयनीयानुभावमुनिवृन्दमन्दाकिनीसन्दर्शनेन मन्दायमानजननीजनदुर्दशश्चतुर्दश दशरथकथिताः समाः समापयतु भवानिति।

तस्मिन्नित्थं प्रार्थनाभाजि सख्यौ
प्रत्याचख्यौ रामभद्रः प्रियोक्त्या।
मातुर्वाक्याद्वल्कलेनावृतं मे
गात्रं चापप्रक्रियां नार्हतीति ॥ ४९ ॥

ततस्तु तदनुरोधेन रोधस्तरोरधस्तात् सुमन्त्रनियन्त्रितरथ्ययोर्दाशरथ्योरातिथ्यं समभ्युपकर्तुमिव मन्दमन्दमरविन्दवृन्दस्यन्दमानमकरन्दबिन्दुसन्दोहवाहिनि वाहिनीतरङ्गमरुति वाति काननगमनावस्थां काकुत्स्थस्य प्रेक्षितुमक्षमायामिव क्ष्माभृति चरमे तिरोहितायामह्नामधिदेवतायां सन्ध्याचरमां रामः समाप्य तस्यां तरुमूलभुवि लक्ष्मणकल्पितं पर्णतल्पमभजत।

रामे विदेहसुतया तरुमूलसंस्थ-
मन्तःपुरं विशति लक्ष्मणसौविदल्लम्

निध्याय तं नियमिताऽमितवाष्पदृष्टि-
र्निद्रां निरस्य निषसाद निषादनाथः ॥ ५० ॥

व्यतीतायां विभावर्य्यामर्य्यममरीचिवीचिमालाहारिणि पूर्व्वोर्वीधरमूर्द्धि विरचितजटाबन्धौ सह सीतया दाशरथी भागीरथीकच्छमागच्छताम्। तत्र रामः प्रहृष्टचेताः सीतामाचष्ट।

मिथ्याश्वमार्गपरिमार्गणदुर्नयस्य
दिव्यौर्पाधं कपिलकोपमहाज्वरस्य।
तातानुतर्पणपवित्रिमभागधेयां
भागीरथीं भगवतीं शरणं भजामः ॥ ५१ ॥

तदनन्तरं रामः सान्त्ववचननिवारितसुमन्त्रः ससौमित्रिर्मङ्गलानि प्रार्थयमानया तया मैथिल्या सह गुहेनानीतां नावमारोह। स एव निषिद्ध निषादाधिपतेरनुगमनमपि तूर्णमेवावतीर्य्य सुरसरितपुरः सम्पूर्णसस्ये मत्स्याभिधाने जनपदे क्षतपद्मलक्ष्यवेधनचतुरश्चतुरो मृगान् निहत्य कुत्रचिदनम्यतिमूले निशामनैषीत्। अन्येद्युरवन्येन पथा प्रयातास्ते प्रभाते प्रतीयमानहोमधूमप्राग्द्वारं भारद्वाजाश्रममाश्रयन्मथाभिनन्दितम मन्दहर्षं महर्षिजनेनादिष्टवर्त्मना वैकर्तनी पूरोपप्लवं प्लवेन वैणवेन निस्तीर्य्य श्रमधनजनसन्निधानशमितशावसत्वचारितं विचित्रं चित्रकूटमचलमभजन्त।

अनुजरचितपर्णागारहृद्यासुमाद्यत्-
परभृतकुलचञ्चत्पञ्चमेरञ्जितासु।

जनकदुहितृयोगाज्जातसाकेतसौख्य-
चिरमरमत राम चित्रकूटस्थलीषु ॥ ५२ ॥

अथ मां वनवासवैरस्यादपि रामः समाह्वयेदिति प्रत्याशयोऽपरतन्त्रः सुमन्त्रः कानिचिदहानि गुहसकाशे नीत्वा निराशस्ततः प्रतिनिवृत्तो निवृत्तोत्सवामयोध्यामासाद्य निर्दोशरथिः सारथिरिति शोकातिरेकात् पौरजनजनितद्वीना क्रन्दमन्दीभूतनेमीघोषादवरुह्य रथाद्दशरथं प्रयाणोन्मुखप्राणं प्राणंसीत्। एतद्दर्शनेन विसंज्ञो दशरथः कौसल्यासुमित्राभ्यां समाश्वासितः कथं प्रयातं रामेण कथं कथितं मैथिलया किं वृतः सौमित्रिरिति मुहुर्मुहुरश्रुकुण्ठितकण्ठः सुमन्त्रमन्वयुंक्त। सोऽपि राज्ञे व्यजिज्ञपत्। देव! कथं ब्रवीमि कठिनहृदयोऽहम्।

सेवारसानुगतपौरमनोरथस्य
पारे रथस्य च सुतौ तव वर्तमानौ।
भूत्वा विदेहदुहितुर्नवसौविदल्लौ
भागीरथीतटवने पथिकावभूताम् ॥ ५३ ॥

किन्तु। देव! त्वत्तनयस्य कुन्तलभरं क्षीरैः स्वधेनूद्भवैः
सेक्तुं नालमरुन्धतीपतिरभूत्तस्याभिषेकोत्सवे।
सिक्तोऽहन्त स एष मैथिलसुताबाष्पोदकोत्पादकै-
र्न्यग्रोधक्षरितैर्जटां रचयितुं क्षीरैर्निषादाहृतैः ॥ ५४ ॥

तस्या विदेहदुहितुः पदयोर्नखेषु
लाक्षा विनापरुणिमा सहसा बभूव।
वन्ये पथि प्रियतमेन सह व्रजन्त्या
वैवश्यमाविरभवन्न कदापि वक्त्रे ॥ ५५ ॥

सीतापतेः किसलयैः परिकल्प्य तल्पं
सम्प्रार्थ्य सत्वदमनाय निशासु दृष्टिम् ।
धन्वी तदङ्घ्रिभजनादिव पुण्यलभ्या-
दखप्नएव वनवर्त्मनि लक्ष्मणोऽभूत् ॥ ५६ ॥

एवं सुमन्त्रनिवेदित पुत्रचरित्रसरमगिरिशिखरशुचि निगमवपुषि ज्योतिषि हृदयलग्नशोकशल्यां कौसल्यामाश्वास्य नरपतिरित्थमकथयत् । पुरा खलु सरयूरोधसि विविधतरुनिवहपिहितविवस्वति वेतस्वति मृगयास्पृहया कमपि समयमगमम् । तत्र ।

तोयादाननिदानपुष्करगजभ्रान्त्या तपस्वी मया
विद्धः कश्चन शब्दवेधनविदा पाथःसमाहरन् ।
तत्पित्रोर्जरदन्धयोरनुमतिं कर्तुं चितां चिन्वतोः
शापो मय्यपतद्भवानपि सुतप्रेम्णा प्रणश्येदिति ॥५७॥

अहं वैश्यस्य शूद्रायां जातस्तस्मान्न संभवेत् ।
ब्रह्महत्येति मामुक्त्वा स्वर्गतो दुर्गतो मुनिः ॥ ५८ ॥

तदवश्यं वश्यएवास्मि मृत्योरिति नरपतिः श्रुतिमार्गगत राम एव विरराम ।

मुनिशापकृतोत्पत्तिविपत्तिर्निष्प्रतिक्रिया ।
यतो दशरथायाशु दिदेश दशमीं दशाम् ॥ ५९ ॥

किं बहुना ।

नाक्रान्तं त्रिदिवं परैः सुमनसां कान्ता न बन्दीकृता
नाकीर्णं पुरुहूतशासनधरैः साकेत वाह्याङ्गणम् ।
नादिष्टां सचिवाश्च भूतलपरित्राणाय यद्यप्यसौ-
नाकं शोकवशाद्गाहदशरथो नाश्वां वहन् वाहने ॥ ६० ॥

अथ दशरथप्रशंसामांसलैः कैकेयीनिन्दाकन्दलितैः रामगुणकीर्त्तनद्विगुणितैरखर्वैः पौरजनपरिदेवनारवैर्मुखरितेषु दिङ्मुखेषु ।

अभूदराजकम्लानमङ्गणं गगनाङ्गणम् ।
आलोक्येव तथा श्रान्तमशेषञ्च महीतलम् ॥ ६१ ॥

ततः प्रभाते वसिष्ठवचसा तैलद्रोण्यां नरपतिं निक्षिप्य क्षिप्रमेव भरतमकथितदशरथकथमेव आनयतेति दूतान् कैकयेषु प्रेषयामासुः । तेऽपि जितपवनजवनहयसङ्कोचितपथास्तुरगपतिपुरे दुःस्वप्नदर्शनदूयमानमानसं भरतमभिवन्द्य गुरुनिदेशं व्याजिज्ञपन् । सोऽयं मातामहेन युधाजिता चानुज्ञातः कतिपयैरेव दिनैरतिनिमित्तसम्भूतसातङ्कः साकेतमाससाद ।

अतिचकितमतिः पुरैव पश्यन् पुरमयथापुरचारपौरवर्गम् ।
न्यविशत भरतः परीतदूतः पितृभवने पितृकाननादनूने ॥ ६२ ॥

स पितरमनवेक्ष्य तत्र मातुः
सदनगतः प्रणिपत्य तामपृच्छत् ।
क्व नु मम गतवान् पितेति सैषा
परुषतरं भरताय वाचमूचे ॥ ६३ ॥

वनचर इव साकं मैथिलीलक्ष्मणाभ्यां
पितृविधिमभिरोद्धुं प्रस्थितो रामभद्रः ।
तदनु तव पिताभूत्कालधर्मानुकूल-
स्त्वमनुभव यथेच्छं निःसपत्नां धरित्रीम् ॥ ६४ ॥

मयूरीव महानागं केकया केकयात्मजा ।
भारत्या भरतं चक्रे परिक्षुभितमानसम् ॥ ६५ ॥

तदनु भरतश्चिरतरं विलप्य विलुप्यमानविवेकः कैकेयी-मकथयत् ।

परिणतिपरुषाणां पाप्मनां सन्निपातात्
न हि भवसि चतुर्णां सा त्वमस्माकमम्बा ।
तदिह तनयवत्यः संलपिष्यन्ति कामं
श्रुतिपुटरचितार्तिं त्वां सवित्रीमकीर्तिः ॥ ६६ ॥

तदनु तन्मुखादाकृष्टदृष्टिरनुजमिदमवादीत् ।

अविकलमिनवंशं दग्धुमाश्रित्य तापं
जनमनसि किरन्त्यां हन्तसत्यां भवत्याम् ।
अनुसवनमपापैर्देवता पूज्यमाना
वहति कथमिदानीमाश्रयाशाभिधानम् ॥ ६७ ॥

अविरतक्षपितार्तिं वत्समालोक्य धेनो-
रपि तनुजयतानां मातुरस्त्रं बभूव ।
तदिह तनयशोकं सन्तरेदेकपुत्रा
कथय कथमिदानीं कोशलेन्द्रस्य पुत्री ॥ ६८ ॥

अपि वदितममन्ते कालयोगान्नरेन्द्रे
वरयुगरसनाभ्यां प्राणवायुं तदीयम् ।
अपनगरमनुष्यावर्त्तनं युक्तरूपं
पितृवनवसुमत्यां क्वापि वल्मीकवत्याम् ॥ ६९ ॥

एषा निकृष्टमतिरात्मगुणोचितेषु
वंशेषु सत्सु बहुधा पिशिताशनानाम् ।
माकन्दशाखिनि वने विषवल्लरीव
हा हन्त ! केकयकुले कथमाविरासीत् ॥ ७० ॥

जननीति विहीना मे जननीति सधर्मवित् ।

